महोरगकिन्नरगजेन्द्र देवताप्सरो भूत पिशाच क्रव्याद मनुष्य मातृगण योगिनी डाकिनी शाकिनीगणा इमं नानाद्रव्य- सहितबलिं गृह्णन्तु हुं फट् स्वाहा। ओं लोकपालादिभ्यो नम इति दत्त्वा ओम् शिवाः कङ्कालवेतालाः पूतना जम्भका- दयः। सर्वे ते तृप्तिमायान्तु बलिदानेन तोषिताः। एष माषभक्तबलिः ओम् शिवादिभ्यो नमः। ततो यथाकालं यथालाभमन्नव्यञ्जनपूपपायसादिकमानीय गन्धादिना संपूज्य दद्यात्। पानार्थं वासितजलम् आचमनीयं ताम्बूलञ्च शेषे कुमारीर्भोजयेत् ब्राह्मणानपि। शेषं नृत्यगीतवाद्यादिभिः नयेत्। इति महाष्टमीपूजा।

अथ सन्धिपूजा। तत्र महाष्टमी शेषदण्ड महानवमी प्रथमदण्डात्मको यः कालः तत्र महाष्टमीपूजावत् यथालाभं पूजां कुर्य्यात्। महानवमीक्षण एव छागादि बलिदानं न तु महाष्टमीक्षणे। अथ अर्द्धरात्रपूजा यद्दिनेऽर्द्धरात्रे महा- ष्टमी लाभस्तद्दिने फलभूमार्थिना पूर्ववत् यथालाभं पूजा कर्त्तव्या यदि तु उभयदिनेऽर्द्धरात्रे महाष्टमीलाभस्तदा पूर्व- दिने एव पूजा।

अथ नवमीकृत्यम्। तत्र उत्तराषाढ़ायुक्तायां केवलायां वा महानवम्यां महाष्टमीपूजावत् (कालाल्पे तु सप्तमी पूजावच्च) यथालाभं कृत्यं विधाय पिष्टप्रदीपयवधान्यसर्षपैर्यथालाभो- पपन्नैः आचारात् न्यस्तपाणिभ्यां शिरः प्रभृतिपादपर्य्यन्तं निर्म- ञ्छयन् देवीं नीराजयेत्। ततो होमं कुर्य्यात्। तद्दिने होमा- सामर्थ्ये महाष्टम्यां होमं कुर्य्यात्। शक्तस्तु उभयदिन एव कुर्य्यात्। तत्र स्वगृह्योक्तविधिना बलदनामाग्निं संस्थाप्य बिल्वपत्रसहितैस्तिलैर्घृताद्यग्रपर्वपूरिकया आर्द्रामलकमालया वा उत्तानकरेण देवतीर्थेन ओम् जयन्तीत्यादि स्वाहान्त-

मन्त्रेण अष्टोत्तरशतकृत्वो जुहुयात्। स्वगृह्योक्तविधिना दक्षिणासहितं होमशेषं समापयेत्। असामर्थ्ये होमकरणाय ब्राह्मणं वृणुयात्। शूद्रस्तु सदैव होमाय ब्राह्मणं वृणुयात्। ततः प्रार्थयेत। ओम् यच्छिद्रं तपश्छिद्रं यच्छिद्रं पूजने मम। सर्वं तदच्छिद्रमस्तु भास्करस्य प्रसादतः। यद्दत्तं भक्तिभावेन पत्रं पुष्पं फलं जलम्। आवेदितञ्च नैवेद्यं तद् गृहाणानुकम्पया। ओम् यदक्षरं परिभ्रष्टं मात्राहीनञ्च यद्भवेत्। क्षन्तुमर्हसि मे देवि कस्य न स्खलितं मनः। ततस्ताम्रादिपात्रे कुशत्रयतिलजलानि आदाय ओम् अद्य आश्विने मासि शुक्ले पक्षे महानवम्यां तिथौ अमुकगोत्रः श्री अमुकदेवशर्मा कृतैतद्वार्षिक शरत्कालीन दुर्गामहापूजा-कर्मणः प्रतिष्ठार्थं दक्षिणामिदं काञ्चनं तन्मूल्यं वा विष्णुदैवतम् अमुकगोत्राय अमुकदेवशर्मणे ब्राह्मणाय तुभ्यमहं ददे। अन्यार्थकरणे तु अहं इत्यत्र ददानीति विशेषः। ब्राह्मणा-सन्निधाने तुभ्यं विना यथासम्भवगोत्रनाम्ने इति विशेषः। ततो ब्राह्मणं कुमारीं पादप्रक्षालनपूर्वकं यथेष्टं द्रव्यं भोज-यित्वा तत्पादचन्दनादिकं शिरसि विधाय भक्त्या अनुव्रजेत्। ब्राह्मणान् भोजयेत शेषकालं गीतवाद्यादिभिर्नयेत्।

अथ दशमीकृत्यम्। कृतस्नानादिराचान्तः पूर्ववद्देवीं पाद्या-दिभिर्यथालाभं वा संपूज्य ओम् दुर्गां शिवाम् [६७२ पृ० २पं] इत्यादिना स्तुत्वा प्रणम्य महिषघ्नीति आदिना सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके। शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते। इत्यनेन संप्रार्थ्य ओम् विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम्। पूर्णं भवतु तत् सर्वं त्वत् प्रसादात् महेश्वरि। इति संप्रसाद्य संहारमुद्रया पुष्पं गृहीत्वा क्षमस्वेति विसृज्य निर्माल्यं गृहीत्वा चण्डेश्वर्यै नम इति ऐशान्यां दिशि पू-

येत्। ओम् उत्तिष्ठ देवि चामुण्डे शुभां पूजां प्रगृह्य च। कुरुष्व मम कल्याण अष्टाभि शक्तिभिः सह। गच्छ गच्छ परं स्थानं स्वस्थानं देवि चण्डिके। व्रज स्रोतो जले वृद्ध्यै तिष्ठ गेहे च भूतये। इत्याभ्यां प्रतिमां विल्वशाखाञ्च नवपत्रिकाञ्च उत्थाप्य स्थानान्तरे नीत्वा पूर्ववत् पिष्टकप्रदीपादिभिर्नीराजयेत्। ततो नृत्यगीतवाद्यब्रह्मघोष क्रीड़ाकौतुकमङ्गलपुरःसरं स्रोतोजलसमीपं गत्वा ओम् दुर्गे देवि जगन्मातः स्वस्थानं गच्छ पूजिते। संवत्सरव्यतीते तु पुनरागमनाय च। इमां पूजां महादेवि यथाशक्ति निवेदिताम्। रक्षार्थन्तु समादाय व्रजस्व स्थानमुत्तमम्। इत्याभ्यां स्रोतसि मज्जयेत्। ततो धूलिकर्दमविक्षेपक्रीड़ाकौतुकमङ्गलभगलिङ्गाभिधानं भगलिङ्गप्रगीतपराक्षिप्तपराक्षेपकरूपं शावरोत्सवं कुर्यात्। ततो देव्या अलङ्कारादिकं ब्राह्मणेभ्यो दद्यात्। ततः शान्त्याशिषी ब्राह्मणेभ्यो गृह्णीयात् इति।

इति वन्द्यघटीय श्रीमन्महामहोपाध्याय रघुनन्दनभट्टाचार्य-
विरचिता शारदीया महापूजापद्धतिः
समाप्ता।

---